तिरुमलतिरुपतिदेवस्थानानि

# सप्तगिरिः

सचित्रमासपत्रिका

मे, २०२२ रू/- ५/-



SAPTHAGIRI (SANSKRIT)
ILLUSTRATED MONTHLY
Volume:9, Issue:2
May-2022, Price Rs.5/-
No. of pages-24

## श्रीपद्मावतीश्रीनिवासपरिणयमहोत्सवः

(२०२२ मे १० तः १२ पर्यन्तम्)

## श्रीगोविन्दराजस्वामिनः ब्रह्मोत्सवः - तिरुपति

### ०४.०६.२०२२ तः १३.०६.२०२२ पर्यन्तम्

| दिनाङ्कः | वासरः | प्रातः | रात्रौ |
|---|---|---|---|
| ०४.०६.२०२२ | मन्दवासरः | - - | अङ्कुरार्पणम् |
| ०५.०६.२०२२ | भानुवासरः | ध्वजारोहणम् | महाशेषवाहनम् |
| ०६.०६.२०२२ | इन्दुवासरः | लघुशेषवाहनम् | हंसवाहनम् |
| ०७.०६.२०२२ | भौमवासरः | सिंहवाहनम् | मौक्तिकमण्टपः |
| ०८.०६.२०२२ | सौम्यवासरः | कल्पवृक्षवाहनम् | सर्वभूपालवाहनम् |
| ०९.०६.२०२२ | गुरुवासरः | आन्दोलिकायां मोहिन्यवातारः | गरुडसेवा |
| १०.०६.२०२२ | भृगुवासरः | हनुमद्वाहनम् सा- वसन्तोत्सवः | गजवाहनम् |
| ११.०६.२०२२ | मन्दवासरः | सूर्यप्रभवाहनम् | चन्द्रप्रभवाहनम् |
| १२.०६.२०२२ | भानुवासरः | रथोत्सवः | अश्ववाहनम् |
| १३.०६.२०२२ | इन्दुवासरः | चक्रस्नानम् पल्लकि उत्सवः | ध्वजावरोहणम् |

## श्रीप्रसन्नवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः - अप्पलायगुण्ट

### ०९.०६.२०२२ तः १८.०६.२०२२ पर्यन्तम्

| दिनाङ्क | वासरः | प्रातः | रात्रौ |
|---|---|---|---|
| ०९.०६.२०२२ | गुरुवासरः | - - | अङ्कुरार्पणम् |
| १०.०६.२०२२ | भृगुवासरः | ध्वजारोहणम् | महाशेषवाहनम् |
| ११.०६.२०२२ | मन्दवासरः | लघुशेषवाहनम् | हंसवाहनम् |
| १२.०६.२०२२ | भानुवासरः | सिंहवाहनम् | मौक्तिकमण्टपः |
| १३.०६.२०२२ | इन्दुवासरः | कल्पवृक्षवाहनम् | सर्वभूपालवाहनम् |
| १४.०६.२०२२ | भौमवासरः | आन्दोलिकायां मोहिन्यवातारः | गरुडसेवा |
| १५.०६.२०२२ | सौम्यवासरः | हनुमद्वाहनम् सा- वसन्तोत्सवः | गजवाहनम् |
| १६.०६.२०२२ | गुरुवासरः | सूर्यप्रभवाहनम् | चन्द्रप्रभवाहनम् |
| १७.०६.२०२२ | भृगुवासरः | रथोत्सवः | अश्ववाहनम् |
| १८.०६.२०२२ | मन्दवासरः | चक्रस्नानम् पल्लकि उत्सवः | ध्वजावरोहणम् |





# गीतामृतम्

यद्यप्येते न पश्यन्ति लोभोपहतचेतसः।
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम्। (भगवद्गीता ३६/१)
कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम्।
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन।। (भगवद्गीता ३७/१)

अर्जुनः श्रीकृष्णं प्रति वदति, ''हे जनार्दन! यद्यपि एते दुर्योधनादयः राज्यस्य लोभेन नष्टविवेकिनः सन्तः वंशनाशनपापं मित्रद्रोहनिमित्तकपापमपि न पश्यन्ति। किन्तु पूर्वोक्तं पापं दोषं वा विचारयद्भिः अस्माभिः (तस्मात् पापात् अस्मान् निवर्तितुं) युद्धः न करणीयः। अतः योद्धुं न शक्नोमि'' इति।

# सङ्कीर्तनम्

मादृशानां भवामयदेहानाम्
ईदृशं ज्ञानमिति येऽपि न वदन्ति ।।मादृशा।।
वाचामगोचरं वाञ्छा सर्वत्र
नीचकृत्त्यैरेव निबिडीकृता
केचिदपि वा विष्णुकीर्तनं प्रीत्या
सूचयन्तो वा श्रोतुं न सन्ति ।।मादृशा।।
कुटिलदुर्बोधनं कुहकं सर्वत्र
विटविडम्बनमेव वेद्म्यधिकं
पटुविमलमार्गसम्भावनपरसुखं
घटयितुं कष्टकलिकाले न सन्ति ।।मादृशा।।
दुरितमिदमेव जन्तूनां सर्वत्र
विरसकृत्यैरेव विशदीकृतं
परमात्मानं भव्यवेङ्कटनाम
गिरिवरं भजयितुं को वा न सन्ति ।।मादृशा।।

(अन्नमाचार्यसङ्कीर्तनम्)



# अवतार समाहारः

मासेषु द्वादशसु प्रत्येकस्यापि वैशिष्ट्यं वर्तते। तेषु चैत्रे युगादिः, श्रीरामनवमीत्यादिपर्वाणि सन्ति। श्रावणमासः विविधव्रताचरणयोग्यकालः, कार्तिकमासः शिवपूजायै प्रशस्तः कालः इत्येवं यथा अन्यमासानां प्राशस्त्यं वर्तते तद्वत् वैशाखमासः अपि भगवतः भगवद्भक्तानां महात्मनां जयन्तीपर्वयुक्तः कालः इति अस्य मासस्य प्राशस्त्यं दृश्यते।

वैशाखशुद्धतृतीयादिने अर्थात् 'अक्षयतृतीया' दिने भगवन्नारायणावतारस्य परशुरामस्य जयन्ती इति पर्वरूपेण तद्दिनमाचरन्ति।

परशुरामः जमदग्निरेणुकादम्पत्योः सकाशात् अवततार। स च स्वपितुः वचनमात्रेण जनन्याः शिरश्छेदनं कृत्वा पितृवाक्यपालकः अभवत्। तथैव सन्तुष्टेन पित्रा वररूपेण मातरम् उज्जीव्य 'मातृदेवो भव' इति वचनमपि पालितवान्। विना कारणेन स्वपितृहन्तकस्य क्षत्रियस्यैकस्य विषये विद्यमानेन कोपेन एकविंशतिवारं भूमण्डलं समस्तं प्रदक्षिणं कृत्वा सम्पूर्णं क्षत्रियकुलमेव प्रायः अहनत्। यः क्षत्रियः देवभक्तः, नीतिमान्, शुद्धश्चासीत् तं त्यक्त्वा सर्वान् राज्ञः जघान। तेन च प्राप्तं ब्रह्महत्यादोषं मार्जयितुं महत् तपः कृत्वा यथेष्टं भूदानमपि चकार। अत एव अधुनापि दक्षिणभारतदेशे अनेके प्रदेशाः परशुरामक्षेत्रमित्येव प्रसिद्धाः सन्ति। त्रेतायुगे रामावतारेण साकं परशुरामस्य अवतारमपि द्रष्टुं शक्यते एकदैव उभौ रामौ इति। अर्थात् भृगुरामं तथा रघुरामं च रामायणे कस्मिंश्चित् सन्दर्भे द्रष्टुं शक्यते।

सम्पादकीयम्

किञ्च मानवसमतामूर्तिः इत्येव प्रसिद्धिं गतस्य श्रीमद्रामानुजाचार्यस्यापि जन्म वैशाखशुद्धचतुर्थीदिने अभवत्। स च महानाचार्यः स्वजीवने वैष्णवसिद्धान्तप्रतिष्ठापनमेव मुख्योद्देश्यमिति घोषितवान्। तद्वत् सर्वमानवसमानतासम्पदानायापि महत्त्वपूर्णं कार्यं कृतवान्।

एवमेव श्रीशङ्कराचार्यस्यापि जन्मदिनं वैशाखशुद्धपञ्चम्यां वर्तते। सः वेदानां, वेदोक्तधर्मस्य रक्षणे च कृतभूरिपरिश्रमः आसीत्।

तथैव वैशाखशुद्धदशम्यां श्रीश्रीनिवासपद्मावत्योः परिणयमहोत्सवः सञ्जातः इति पुराणैः ज्ञायते। तत्पुरस्कृत्य देवदेव्योः श्रीनिवासपद्मावत्योः विवाहमहोत्सवं वैभवोपेततया समाचरन्ति इति सम्प्रदायः। स च उत्सवः भक्तजनमनोनन्दकः इत्यत्र नास्ति संशीतिः।

किञ्च अस्मिन्नेव वैशाखमासे शुद्धत्रयोदश्यां तिथौ भक्ताग्रगण्यस्य प्रह्लादराजस्य वचनमनुसृत्य स्तम्भादाविर्भूय हिरण्यकशिपोः संहारं कृतवतः श्रीमन्नारायणवताररूपस्य श्रीमन्नृसिंहस्यापि आविर्भावदिनमिति तदा विविधपूजादिकमाचरामः धर्मरक्षकं भक्तरक्षकं च देवदेवं स्मरामः च।

एवञ्च निखिलगुणगणभरितस्य निरस्तसमस्तदोषवतः भगवतः श्रीमन्नारायणस्य अवतारसमयत्वेन तथा सर्वजनहिताय भुवमागतानां जन्मसमयत्वेन तथा नित्यकल्याणस्वरूपिणः कल्याणसमयत्वेन पूतोऽयं समयः अत्यन्तं पवित्रः वैशाखमासीयः। तदर्थं विहितकाले सत्कार्याणि, गुरुस्मरणं, भगवत्कैङ्कर्यञ्च कुर्वन्तः श्रीश्रीनिवासस्य परमानुग्रहेण जीवनसाफल्यं प्राप्नुमः।

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*



# सप्तगिरिः


गौरवसम्पादकः:-
डा.के.एस्.जवहर् रेड्डि I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी,
ति.ति.दे.मुद्रणालयः,
तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.





तिरुमल-तिरुपतिदेवस्थानानां सचित्रमासपत्रिका

सम्पुटिः-०९ सञ्चिका-०२

## मे २०२२

श्रीशुभकृत्संवत्सरस्य वैशाखशुक्लप्रथमातः
श्रीशुभकृत्संवत्सरस्य ज्येष्ठशुक्लप्रथमापर्यन्तम् - १९४३




**मुखचित्रम्** – श्रीभूसमेतमलयप्पस्वामिनः, तिरुमल।
**अन्तिमरक्षापुटः** – आञ्जनाद्रिः हनुमान्, तिरुमल।


### सङ्केतः
प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९, २२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org



एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-

# हनुमज्जन्मस्थलं तिरुमलक्षेत्रीयः अञ्जनाद्रिः पौराणिकप्रमाणानि

तेलुगुमूलम् - आचार्य राणि सदाशिवमूर्तिः
संस्कृतानुवादः - श्री वि.प्रदीपकुमारः
चरवाणी-९४९१६४६५३२

समग्रभारते, भारतेतरदेशेषु तत्रापि मुख्यतया आग्नेयासियापर्यन्तमपि हनुमद्विषयकभक्त्यादयः चिरादपि दृश्यन्ते। उत्तरभारते तु रामे इव हनुमति अपि भक्तिसमर्पणे श्रद्धालवः सन्ति जनाः। उत्तरभारते श्री तुलसीदासविरचितं 'रामचरितमानस' स्तोत्रं वाल्मीकिरामायणसदृशं शोभते इति नातिशयोक्तिरियम्। तत्रापि 'श्री हनुमान् चालीसा' ग्रन्थं प्रायः सर्वेपि पठन्त्येव। एतादृशरीत्या सुप्रसिद्धस्य हनुमतः जन्मस्थलविषये तु भक्ताः दृष्टिं न सारयन्ति अधिकतया। किन्तु तत्तत्स्थलीयजनश्रुतीः अनुसृत्य 'गुजरात् देशे नव्सारि जिल्लायां डाङ्ग प्रान्ते, जार्खण्ड् देशे गुम्ला प्रान्ते, हर्याणादेशे कैथाल् (कपिस्थल्) प्रान्ते, नासिक् समीपे अञ्जनेरि प्रान्ते, कर्णाटक हम्पि समीपे किष्किन्धप्रान्ते हनुमान् जन्म अलभत' इत्येवं पञ्चसु वा षट्सु स्थलेषु भारते हनुमज्जन्म अभवदिति श्रूयते। एतादृशस्थानिककथनानि पर्याटकाः तत्तत्प्रदेशे श्रुत्वा ग्रामगमनात्परं विस्मरन्तः सन्ति। पूर्वोक्तेषु पञ्चसु जनश्रुतिषु न किञ्चन प्रमाणं दृश्यते।

परन्तु पूर्वोक्तात् भिन्नतया तिरुमलीय-अञ्जनाद्रिविषये, अञ्जनाद्रिः एव हनुमज्जन्मस्थलमिति विषये च पुराणेषु, श्रीवेङ्कटाचलमाहात्म्ये, नानाविधागमेषु, भक्तिसाहित्ये, सङ्कीर्तनाचार्यकीर्तनेषु च नानाविधप्रस्तावनाः लभ्यन्ते।

तान् प्रस्तावान् आहत्य त्रिधा विभक्तुं शक्यते यथा- १. श्रीशेषाचलनाम्ना विराजमानः तिरुमलगिरिष्वेकः अञ्जनाद्रिरिति केचन, २. अञ्जनादेवी अत्रैव पुत्रप्राप्त्यै तपश्चकारेति केचन, ३. हनुमतः जन्मस्थलमिदमेवेति केचन वदन्ति इति।

एतादृशाधारपरिशीलनक्रमे पुराणाधाराः कथं अस्मिन् विषये लभ्यन्ते चेत्, १८ महापुराणान्तर्गते स्कन्दपुराणे औत्तरीय-दाक्षिणात्यप्रतिषु क्वचित् अञ्जनाद्रिप्रस्तावः इदमित्थमिति दृश्यते।

किञ्च १२ पुराणेषु विहितं श्रीवेङ्कटाचलक्षेत्रमाहात्म्यम् एकीकृत्य 'श्रीवेङ्कटाचलमाहात्म्यम्' इति नाम्ना मुद्रापितवन्तः। ततः पूर्वस्मात् कालात् अपि अर्थात् रामानुजाचार्यस्य कालादपि अस्य ग्रन्थस्य महत्स्थानमासीत् इति श्रीवेङ्कटाचलेतिहासमाला इत्यादिग्रन्थाः वदन्ति। ग्रन्थमुद्रणप्रचारात् परं प्रथमवारं कलकत्ताक्षेत्रीय- श्रीस्वामि महन्त श्रीप्रयागदासवर्येण पण्डित श्रीकेसरी कान्त शर्मा, पण्डित श्री लक्ष्मीधर पाठकवर्ययोः सम्पादने मुद्रापितः अस्ति १९२९ वर्षे श्रीवेङ्कटाचलमाहात्म्यम् ग्रन्थः। तत्रस्थे स्कन्दपुराणभागे तथा स्वतन्त्रे स्कन्दपुराणे विद्यमानं श्रीवेङ्कटाचलस्य माहात्म्यं च एकरीत्या



अस्तीत्यतः अवशिष्टैकादशपुराणभागाः अपि प्रमाणान्येवेति पण्डितसम्मतविषयः।

एवं लभ्यमानाधारपरिशीलने श्रीवेदान्तदेशिकाः, श्रीवेङ्कटाध्वरिः इत्यादिकविपुङ्गवग्रन्थेषु, अन्नमय्य, पुरन्दरदासः, तरिगोण्ड वेङ्गमाम्बा इत्यादीनां कीर्तनेषु, आगमेषु, श्रीवेङ्कटेशनामावल्यां, श्रीवेङ्कटेश्वरगद्ये, इतरस्तोत्रेषु च तत्र तत्र अञ्जनाद्रेः नाम श्रूयते।

**अञ्जनाद्रिर्वृषाद्रिश्च शेषाद्रिर्गरुडाचलः।**
**तीर्थाद्रिः श्रीनिवासाद्रिः चिन्तामणिगिरिस्तथा।।**
**वृषभाद्रिर्वराहाद्रिः ज्ञानाद्रिः कनकाचलः।**
**आनन्दाद्रिश्च नीलाद्रिः सुमेरुशिखराचलः।।**
**वैकुण्ठाद्रिः पुष्कराद्रिरिति नामानि विंशतिः।**

इति ब्रह्मपुराणश्लोकेषु श्रीशेषाचलस्य श्रीवेङ्कटाचलस्य वा प्रसिद्धनामसु प्रथमं नाम अञ्जनाद्रिरिति। अत्र केचन 'इति नामानि विंशतिः' इत्युक्त्वा षोडशनामान्येव गृहीतानीति हेतोः संशयास्पदश्लोकाः एते इति वदन्ति। किन्तु एते आधुनिकजनेभ्यः अचिरात् न लिखिताः अपि तु परम्परागताः। अस्य ग्रन्थस्य मुद्रणात् अनेकसहस्रवर्षेभ्यः प्रागेव अवशिष्टानि चत्वारि नामानि प्रायः लुप्ताः स्युः। तावता दृष्टानि षोडशनामानि अप्रामाणिकानि न भवन्ति।

एवमेव पद्मपुराणतः सन्दर्भद्वयम् उदाह्रियते। श्रीवेङ्कटाचलसन्दर्शकेषु प्रथमतया गण्यः श्री शुकमहर्षिः।



सः तिरुशुकनूरु (तिरुचानूरु) क्षेत्रे पद्मावतीदेवीं संसेव्य ततः रम्येषु रम्यं श्रीवेङ्कटाचलदिव्यक्षेत्रं ददर्श इति प्रस्तावनसन्दर्भे तत्क्षेत्रं 'अञ्जनगिरि' नाम्ना प्रास्तौत् इति दृष्टिपथमायाति। तथैव नारायणाद्रिरूपेण वर्णनसन्दर्भेऽपि अमुं पर्वतं 'अञ्जनगिरि' इति ब्रुवन् अस्य तटे स्वामिपुष्करिणी वर्तते इति, तत्र स्नानफलमपि अब्रवीत्।

### पद्मपुराणे

**तस्य सानुमतः सोऽपि पदानाश्रित्य सत्वरः।**
**तिरारेष्वाप्लवं कुर्वन् विमलोदेष्वनन्यधीः।।.....**
**अतन्द्रितोऽञ्जनगिरिं प्राप्य विप्रोपवेशनम्।।**

सः मुनिः अञ्जनाद्रिं प्राप्य तत्रस्थपवित्रतीर्थेषु स्नात्वा विगतालसः सन् पर्वतपादेष्वचरत्।

### शुकपुरात् शुकेन शेषशैलागमनम्

**तत्र त्रिषवणस्नानं कृत्वा व्यासोरसो मुनिः।...**
**उषित्वा त्रिदिनं तत्रोपासकः स परायणः।।**
**द्रष्टुकामोऽखिलाश्चर्यं पुनरप्यञ्जनाचले।।२।।**

व्यासपुत्रः शुकः तत्र त्रिषवणस्नानं कृत्वा दिनत्रयं यावत् उपासनापरः सन् उवास। तदञ्जनाचले विद्यमानश्चर्यविषयान् द्रष्टुमैच्छत्।

### नारायणाद्रिवर्णने

**प्राचीने तस्य देशस्य स्थितेऽञ्जनगिरेस्तटे,**
**तरुणादित्यसङ्काशाऽखिलाभीष्टदा।।१।।**

पुरातनेऽस्मिन् प्रदेशे अञ्जनगिरितटे प्रभातसूर्यकान्तिभिः समा स्वामिपुष्करिणी अभीष्टप्रदायिनी वर्तते।

**कुञ्जेञ्जनगिरेः स्वामिपुष्करिण्यप्सु यो नरः,**
**कृताप्लवः सकृत् सत्यं कृतकृत्यो भवेन्नरः।।२।।**

तादृशाञ्जनगिरौ स्वामिपुष्करिण्यां यः स्नानमाचरति, सः स्वकीयेषु अखिलकार्येषु साफल्यमाप्नोति।

तदनु स्कन्दपुराणे वैष्णवखण्डे ३९, ४० अध्यायायोः अतिविस्तृतः हनुमज्जन्मवृत्तान्तः वर्णितः। स च विषयः औत्तरीयदाक्षिणात्यप्रतिष्वपि दृश्यते। तदनुसारेण हनुमतः जन्म वेङ्कटाद्रावेव आकाशगङ्गासमीपे अभवदिति

ज्ञायते। मतङ्गमहर्षिसूचनया अस्मिन्नेव प्रदेशे अञ्जनादेव्याः तपःप्रभावेण तत्रैव हनुमान् अजनि इत्यतः ब्रह्मणः वरेण अस्य पर्वतस्य अञ्जनाद्रिरिति नाम प्रसिद्धमभवत् इति पुराणवचनम्। अत्रायं विशेषः, स्कन्दपुराणमनुसृत्य अञ्जनादेव्याः पिता राक्षसः महापराक्रमशाली केसरी। तस्याः भर्ता एकः कपिवीरः। तस्यापि नाम केसरी।

**मतङ्ग! मुनिशार्दूल! वचनं मे शृणुष्व ह,**
**पिता मे केसरी नाम राक्षसः शिवतत्परः।।**

**(स्का. वैष्ण.ख उप-४तः ६)**

हे मुनिश्रेष्ठ! मतङ्गमहर्षे! मम पिता केसरी नामकः राक्षसः शिव भक्तश्च।

**ततः कालन्तरे विप्रः केसर्याख्यो महाकपिः,**
**ययाचेमां ददस्वेति पितरं मे ततः पिता,**
**तस्मै मां दत्तवांश्चैव परिवारं ददौ च सः,**
**गवां लक्षसहस्राणि गजलक्षं महामनाः।।**

**(तत्रैव ३९-१०,११श्लो)**

अथ केसरीनामकवानरवीरः मां जायारूपेण ददस्वेति मे पितरम् अयाचत। पिता च मया साकं अनेकसंख्याकान् गो - अश्व - गजादीन् च तस्मै अदात्।

एवञ्च अञ्जनादेव्याः पिता केसरी राक्षसः, भर्ता केसरी कपिवीरः। अयमेव विषयः श्रीवेङ्कटाचलमाहात्म्ये ब्रह्माण्डपुराणभागेऽपि अस्ति।

**त्रेतायुगेऽसुरः कश्चित् केसरी भुवि विश्रुतः।**

**(ब्रह्मण्डपुराणे तीर्थखण्डे भृगुनारदसंवादे ५४ श्लो)**

**ततः कपिवरः कश्चित् केसरी भुवि विश्रुतः।**
**अभिगम्य यायाचे तां कन्यां यौवनशालिनीम्।।**

**(तत्रैव ६८ श्लो)**

केसरी नामा कपिवरः शिववरात् राक्षसकेसरिणः सकाशात् जातां कन्यां वोढुं तस्याः पितुः अङ्गीकारमयाचत। ततः विवाहोप्यभवत्।

तदेवम् उभयत्रापि हनुमज्जन्मस्थलं तिरुमलगिरिष्वन्यतमः अञ्जनाद्रिः एव इत्युक्तम्।

एवमेव ब्रह्माण्डपुराणे तीर्थखण्डे भृगुनारदसंवादे पञ्चमाध्याये तु,

**अञ्जने त्वं हि सेषाद्रौ तपस्तप्त्वा सुदारुणम्।**
**पुत्रं सूतवती यस्माल्लोकत्रयहिताय वै।।**
**प्रसिद्धिं यातु शैलोऽयमञ्जने नामतस्तव।**
**अञ्जनाचल इत्येव नात्र कार्या विचारणा।।**

"हे अञ्जने! त्वम् अस्मिन् शेषाद्रौ श्रेष्ठं तपः तप्त्वा लोकश्रेयसे इमं पुत्रं सूतवती। अतः इतः परं वेङ्कटगिरिरयं तव नाम्ना अञ्जनाद्रिः इति नाम्ना प्रसिद्धिमेति" इत्युक्त्वा ब्रह्मादिदेवाः स्वलोकमगच्छन्। ततः अञ्जना अनन्देन पुत्रेण साकं श्रीवेङ्कटगिरौ स्वाश्रममगच्छत्।

श्रीवेङ्कटाचलमाहात्म्ये वराहपुराणभागे (३६ अध्याये २८, २९ श्लो) अपि कलियुगीयवेङ्कटाद्रिरेव त्रेतायुगीयाञ्जनाद्रिरिति विषयः दृश्यते।

**कृते वृषाद्रिं वक्ष्यन्ति त्रेतायामञ्जनाचलम्।**
**द्वापरे शेषशैलेति कलौ श्रीवेङ्कटाचलम्।।**
**अञ्जना तु तपः कृत्वा हनूमन्तमजीजनत्।**
**तदा देवास्समागत्य देवसाहाय्यकारकम्।।**

यस्यमातुपुत्रमसूतासौ जगुः तस्मादिमं गिरिम्।
अञ्जनाद्रिम् ......

अर्थात् अञ्जना पुत्रमसूत अत्र इति अयं पर्वतः अञ्जनाद्रिः अभवत् इति।

एतादृशानि उदाहरणानि विविधप्राचीनेतिहासपुराणादिग्रन्थेषु कुत्रापि हनुमज्जन्मसथलत्वेन अन्यप्रान्तसमर्थकानि न सन्ति। अतः पूर्वोदाहृतप्रमाणाधारेण हनुमतः जन्मस्थानं वेङ्कटाद्रौ आकाशगङ्गाक्षेत्रस्थः अञ्जनाद्रिरेवेति निश्चेतुं शक्यते।

एवमेव श्रीवेङ्कटाचलमाहात्म्ये ब्रह्माण्डपुराणभागे आञ्जनेयस्य जन्मनः अनन्तरं तत्रैव उषित्वा तत्रस्थगिरि-तीर्थ-वनादिसेवनेन साकं भक्ति-ज्ञानप्रदं विष्णुतीर्थमपि स्वयं निर्मितवानित्यस्ति।

किञ्च अस्मिन् अञ्जनाद्रौ यानि पुण्यदायकतीर्थानि सन्ति, तेष्वन्यतमः **आञ्जनेयतीर्थम्** इत्यप्येकमिति विषयः अवश्यं ग्राह्य एव विशेषः।



# विशिष्टगुणनिधिः

# श्रीमद्रामानुजाचार्यः



- डा.एम्.जि.नन्दनराव्
चरवाणी - ८५००५६३०७४

विशिष्टाद्वैतसिद्धान्तप्रवर्तकाग्रेसराणां श्रीमद्रानुजाचार्याणां जयन्ति शुभावसरे तेषां विराड्व्यक्तित्वस्य कतिपयमुखानाम् अवलोकनप्रयासः अत्र क्रियते।

श्रीरामानुजाः श्रीवैष्णवसंप्रदाये आदिशेषावतारत्वेन सम्मान्यन्ते।

**अनन्तः प्रथमं रूपं त्रेतायां लक्ष्मणस्तथा।**
**द्वापरे बलभद्रश्च कलौ रामानुजः स्मृतः॥**

इति प्रसिद्धः श्लोकः सांप्रदायिकानां धारणां स्पष्टं करोति। दिव्यांशसम्भूतानां तेषां कार्याणि दिव्यानीति भक्तजनाः भावयन्ति। मानवभावेन तेषां चरितम् अवलोक्य तैः कृतानां कार्याणां वैशिष्ट्यपरिशीलनप्रयासः अत्र क्रियते।

**१. प्रतिभा-** काञ्चीपुरे यादवप्रकाशानां सकाशे वेदान्ताध्ययनसन्दर्भे बहुत्र उपनिषद्व्याख्यानानि युक्तियुक्तानीति न भासन्ते स्म। तादृशसन्दर्भेषु रामानुजाः युक्तान् ततोऽपि श्रेष्ठान् वा अर्थान् वदन्ति स्म। रामानुजानां तर्कं तिरस्कर्तुं यादवप्रकाशाः न प्रभवन्ति स्म। किन्तु तेषां प्रतिभाम् अङ्गीकर्तुं मनः नाङ्गीकरोति स्म। सा अनङ्गीकारबुद्धिरेव तेषु क्रोधम्, ईर्षां च जनयति स्म।

छान्दोग्योपनिषदः ''य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते तस्य कप्यासं पुण्डरीकमेवमक्षिणी'' इति मन्त्रार्थविचारे कप्यासशब्दस्य यादवप्रकाशानां व्याख्या नीचोपमा आसीत्। तदा श्रीमद्रामानुजैः कृतं - ''गम्भीराम्भः समुद्भूतसुमृष्टनालरविकरविकसितेति'' व्याख्यानं श्रेष्ठं, युक्तियुक्तमप्यासीत्।

श्रीरामानुजाचार्याः मालाधर (तिरुमालैयाण्डान्) नामकेभ्यः गुरुभ्यः नम्माळ्वार् महाशयानां तिरुवाय्मोळिप्रबन्धस्य अर्थग्रहणम् अकुर्वन्। बहुषु सन्दर्भेषु मालाधरैः उक्तानाम् अर्थानामपेक्षया युक्तान् अर्थान् रामानुजाः प्रतिपादयन्ति स्म। एवं तेषां प्रतिभायाः उदाहरणानि बहूनि।

**२.उत्तमशिष्यलक्षणानि -** आचार्यस्य कठिन-परीक्षाणां सहनं शिष्यस्य उत्तमलक्षणम्। गोष्ठीपुरे (तिरुक्कोट्टियूर्) विद्यमानाः गोष्ठीपूर्णाः (तिरुक्कोट्टियूर्नम्बिवर्याः) ''सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज'' इति विद्यमानस्य श्रीकृष्णचरमश्लोकस्य अपूर्वान् अर्थान् जानन्ति इति महापूर्णेभ्यः (पेरियनम्बिवर्येभ्यः) ज्ञात्वा रामानुजाचार्याः गोष्ठीपुरं गतवन्तः। अपरीक्ष्य विद्या न दातव्येति मत्वा गोष्ठीपूर्णाः न उपदिष्टवन्तः। रामानुजाः श्रीरङ्गात् गोष्ठीपुरं प्रति अष्टादशवारं गमनागमनमकुर्वन्। ततः परमेव विश्वस्य परमरहस्यविचारान् गोष्ठीपूर्णा उपादिशन्।

**३.उत्तमाचार्यलक्षणम् -** ज्ञातां विद्यां कापट्यं विना शिष्योद्धारधिया उपदेशनम् उत्तमाचार्यलक्षणम्। गोष्ठीपूर्णाचार्याः चरमश्लोकार्थं बोधयित्वा ''अपरीक्षितेभ्यः नोपदिशामि'' इति प्रतिज्ञां कारितवन्तः। रामानुजाः कूरेशमिश्राय, दाशरथये च अनुपदिश्य स्थातुं न शक्नोमीति तयोरुपदेशाय अनुमतिं प्रार्थितवन्तः।

श्रीरामानुजाचार्याणां शिष्येषु किडम्बि आच्चान् (आत्रेयरामानुजाचार्याः) अन्यतमाः। कदाचित् श्रीरामानुजाचार्याणां मठे भोजनावसरे जलवितरण् आच्चान् वर्याः कुर्वन्तः आसन्। परिवेशनसन्दर्भे एकस्मै भक्ताय अश्रद्धया जलं परिवेशयन्तः आच्चान्वर्याः श्रीरामानुजानां दृष्टौ पतिताः। झटित्येव आच्चान् वर्यस्य समीपम् एत्य स्वस्य त्रिदण्डेन मृदुस्पृष्ट्वा श्रद्धया परिवेशनं कर्तुम् सूचितवन्तः। स्खालित्ये गुरुः शास्ता भवति। एवं बहुषु स्थानेषु रामानुजाः उत्तमगुरोः निदर्शनभूता अभवन्।

**४.औदार्यम्-** तिरुक्कोट्टियूर्ग्रामे विद्यमाने सौम्यनारायणालये आसक्तान् सर्वानपि समाहूय गोष्ठीपूर्णेभ्यः ग्रहीतान् रहस्यार्थान् उपादिशन्। एतत् श्रुत्वा कुपिताः गोष्ठीपूर्णाः एवम् अपरीक्ष्य सर्वेभ्यः रहस्यार्थान् उपदिश्य नरकं गमिष्यति इति अवोचन्। तदा रामानुजाः ''भवताम् आज्ञाधिक्कारेण अहं नरकं गमिष्यामि। किन्तु ये उपदेशं प्राप्तवन्तः ते सर्वे सद्गतिं प्राप्नुवन्ति। तेनैव अहम् कृतार्थो भविष्यामि'' इति अवोचन्। श्रीरामानुजाचार्याणां परसमृद्धिभावात् आश्चर्यानन्दमग्नाः तिरुक्कोट्टियूरनम्बिवर्याः ''एम् पेरुमानारे'' (अस्माकं स्वामिनः, अस्मत्तः श्रेष्ठाः) इति सम्बोधितवन्तः। कालक्रमे रामानुजाः ''एम्बेरुमानार्'' इति नाम्नैव सम्प्रदाये प्रसिद्धिं गताः।

**५.समताभावः -** कर्नाटकराज्यस्य मोलुकोटे श्रीवैष्णवानां प्रसिद्धं क्षेत्रम्। सम्प्रदाये तिरुनारायणपुरमिति इदं क्षेत्रं प्रसिद्धम्। अत्रत्या अर्चामूर्तिः बहुकालात् अदृश्या आसीत्। भगवद्रामानुजाः एतं विषयं स्वप्नेन ज्ञात्वा तत् प्रान्तस्य परिपालकस्य विष्णुवर्धनस्य साहाय्येन मूर्तिमन्विष्य आलये प्रतिष्ठापितवन्तः। मूर्तेः अन्वेषणे आलयप्रवेशार्हतारहिताः साहाय्यमाचरितवन्तः आसन् इति ज्ञात्वा, तेभ्यः कृतज्ञतां ज्ञापयितुम् आलयप्रवेशं तेभ्यः कल्पितवन्तः।

यामुनाचार्याणां शिष्येषु काञ्चीपूर्णाः प्रमुखाः। ते ब्राह्मणेतराः आसन्। तेषां विशुद्धज्ञानं वीक्ष्य रामानुजाः स्वस्य गुरुरिति मत्वा तेषां भुक्तशेषमपि ग्रहीतुं सिद्धाः अभवन्। आभिजात्यादपि ज्ञानमेव प्रधानमिति आचार्याणां दृढभावः।

कावेर्यां स्नात्वा प्रतिदिनं धनुर्दासम् आलम्बनं कृत्वा प्रतिनिवर्तन्ते स्म। एतत्सर्वमपि रामानुजाचार्याणां समभावस्य निदर्शकानि।

**६.वादपाटवम्-** शास्त्राणाम् अध्ययनमात्रेण सर्वे वादपटवः न भवन्ति। रामानुजाः स्वप्रतिभया, पाण्डित्येन, तर्केण, समयस्फूर्त्या च वादेषु विजयिनः भवन्ति स्म। तिरुमलक्षेत्रे रामानुजाचार्याणां काले भगवतः हस्तयोः शङ्खचक्राभरणानि नासन्। अतः तदा मूलमूर्तेः स्वरूपं वीक्ष्य स्वानुकूलव्याख्यानादिकं कुर्वन्तः विवदन्तः आसन्। तदा मूलमूर्तेः स्वरूपनिर्धारणार्थं पुराणेभ्यः, दिव्यप्रबन्धादिभ्यः बहूनि प्रमाणानि प्रदर्श्य रामानुजाः तिरुमलक्षेत्रस्य प्रधानदेवः महाविष्णुरेवेति निर्धार्य अन्येषां वादान् निराकृतवन्तः।

मेलुकोटेक्षेत्रस्य समीपे तोण्डनूरु इति ग्रामे शतसंख्याकैः जैनपण्डितैः सह वादं निर्वर्त्य जयमवाप्नुवन्। यज्ञमूर्तिरिति प्रसिद्धेन अद्वैतविदुषा अष्टादश दिनानि वादं कृत्वा जयम् अवाप्नुवन्।

**७. दीर्घदृष्टिः-** श्रीरामानुजाचार्याः तिरुमलक्षेत्रस्य आलयस्य निर्वहणभारं अनन्तार्येभ्यः दत्वा श्रीरङ्गक्षेत्रम् अगमन्। अनन्तार्याः स्वस्य वृद्धाप्ये विष्वक्सेनै-काङ्गिनामकब्रह्मचारिणे दायित्वम् अददन्। रामानुजाः आलयव्यवस्थां गृहस्थानामपेक्षया सन्यासिनः निर्वहन्ति चेदेव युक्तमिति मत्वा तस्मै ब्रह्मचारिणे सन्यासदीक्षाम् अददन्। श्रीवैष्णवसन्यासिनं तमिळभाषायां 'जीयर्' इति नाम्ना व्यवहरन्ति। कालान्तरे उत्तराधिकारिणः नियुक्तिरपि अभवत्। एवम् जीयर् व्यवस्था श्रीरङ्गे, तिरुनारायणपुरे, काञ्चीक्षेत्रे च समारब्धः। इदीनीमपि आलयसमयाचाराः जीयर्स्वामिनां निर्वहणे एव प्रवर्तन्ते।

**८.व्याख्यानरचनानैपुण्यम्-** श्रीरामानुजाः बादरायणप्रणीतानां ब्रह्मसूत्राणां व्याख्यानं विशिष्टाद्वैतसिद्धान्तरीत्या अकुर्वन्। तं भाष्यं काश्मीरदेशस्य शारदापीठे ''भाष्यं नाम भवतामेव'' इति प्रशंसां कृत्वा श्रीभाष्यमिति नामकरणम् अकुर्वन्। अन्येपि श्रीवैष्णवकादम्बरीति प्रशंसाम् अकुर्वन्।

**९.भक्तिपारवश्यम् -** कदाचित् श्रीमद्रामानुजाः भिक्षाटनार्थं श्रीरङ्गक्षेत्रस्य पुरवीथिकासु अटन्तः गोदादेव्याः तिरुप्पावैप्रबन्धमननं कुर्वन्तः आसन्। तदा महापूर्णानां गृहस्य पुरतः स्थितवन्तः। तदा तिरुप्पावैग्रन्थस्य ''शेन्दमरैक्कैयाल् शरीर् वलै ओलिप्प वन्दु तिरुवाय्'' (हे नीलादेवि! रमणीयकमलकरा भवती कङ्कणानां कलकलरवेण सह द्वारमुद्घाटय'') इति सूक्तिं पठन्तः आसन्। तावता महापूर्णानां पुत्री कङ्कणानां नादेन द्वारमुद्घाट्य भिक्षां दातुम् समागता। तां दृष्ट्वा साक्षात् नीलादेवी एव प्रत्यक्षा अभवदिति भक्तिपारवश्येन मूर्च्छिता अभवन्।

एवं रामानुजानां जीवनं बहुगुणविभूषितम्। तदृशेभ्यः महासत्वेभ्यः मङ्गलम्।

**शेषो वा सैन्यनाथो वा श्रीपतिर्वेति सात्विकैः।**
**वितर्काय महाप्राज्ञैः भाष्यकाराय मङ्गलम्।।**



# विशाखसागरतीरे श्रीवेङ्कटेश्वरस्वामिनः आलयः।

तिरुमलक्षेत्रीयश्रीवेङ्टेश्वरालयवत् विशाखपट्टणे ऋषिकोण्ड प्रान्ते प्रकृतिरमणीयतानां मध्ये अस्यालयस्य निर्माणकार्यं ति.ति.दे. २०१९ वर्षे आरभत। समुद्रतलात् ६० मीटर् ऊर्ध्वभागे १० Acre विस्तीर्णे भूमौ रू.२८ कोटि निधिना ति.ति.दे. पक्षतः अयमालयः शोभायमानरीत्या सञ्जीकृतः। लघु तिरुपतिवत् अत्र सौकर्याणि कल्पितानि। अस्य पुरतः श्री बेडी आञ्जनेयस्य आलयं निर्मितवन्तः। मूलविग्रहस्य उभयतः श्रीपद्मावती-आण्डळ्देव्योः आलयौ निर्मितवन्तः। अस्य आलयस्य महासम्प्रोक्षणकार्यक्रमः २०२२ मार्च् १८ तः २३ पर्यन्तमाचरितः। तस्य दृश्यानि तु अग्रिमपुटे प्रदत्तानि।






दिनद्वयं यावत् तिरुपति श्वेता भवने आचरित 'गोशालानिर्वाहकानां तथा गवाधारितप्रकृतिव्यवसायिकानां शिक्षणे' वर्च्युवल् विधानेन ति.ति.दे. कार्यनिर्वहणाधिकारिणः डा॥ के.यस्.जवहर् रेड्डि, ए.ऐ.एस्., महाभागाः प्रारम्भकाः आसन्। तत्र च ति.ति.दे. तिरुपति संयुक्तकार्यनिर्वहणाधिकारिणः श्री वि.वीरब्रह्मम्, ए.ऐ.एस्., तथा तदितरोन्नताधिकारिणश्च भागमगृह्णन्।



२५.०३.२०२२ दिने तिरुमल पि.ए.सि - १ निकटे आकस्मिकपरीक्षकाः सन्तः भक्ताभिप्रायावलोकने ति.ति.दे. पालकमण्डल्यध्यक्षाः श्री वै.वी.सुब्बारेड्डि महाभागाः।



२६.०३.२०२२ दिने तिरुमल श्रीस्वामिनः दर्शनायागतेभ्यः श्री अहोबिलमठस्य ४६ तम जीयर् श्री श्री श्री रङ्गनाथयतीन्द्र महादेशिकन् पादेभ्यः आलयमर्यादापुरस्सरं स्वागतकर्तारः ति.ति.दे. अतिरिक्तकार्यनिर्वहणाधिकारिणः श्री ए.वी.धर्मारेड्डि, ऐ.डि.ई.एस्., महोदयाः। तत्र च आलयस्य डिप्यूटी ई.ओ. श्री रमेष् तदितरालयाधिकारिणः।




२८.०३.२०२२ दिने श्री ताळ्ळपाक अन्नमाचार्यस्य ५१९ तमे वर्धन्तिसन्दर्भे तिरुपति अलिपिरौ 'मेट्लोत्सवे' आचरितः सङ्कीर्तनागोष्ठिनादः। तत्र च ति.ति.दे. तिरुपति संयुक्तकार्यनिर्वहणाधिकारिणः श्री वि.वीरब्रह्मम्, ऐ.ए.एस्., तदितरकलाकाराः च भागग्राहिणः अभवन्।



०६-०४-२०२२ दिने पदोन्नतिनिमित्तम् अन्यत्र गन्तृभ्यः ति.ति.दे. सि.वि.यस्.ओ, श्रीगोपीनाथ् जेट्टि, ऐ.पि.एस्., महाभागेभ्यः ज्ञापिकादाने ति.ति.दे. अतिरिक्तकार्यनिर्वहणाधिकारिणः श्री ए.वि.धर्मारेड्डि, ऐ.डि.ई.यस्., महोदयाः।



०६.०४.२०२२ ति.ति.दे. नवीनतया सि.वि.एस्.ओ रूपेण तिरुमल श्रीस्वामिनः आलये पदवीस्वीकर्तारः श्री डि.नरसिंहकिशोर्, ऐ.पि.एस्., महाभागाः।



# हरिदासवाङ्मये श्रीवेङ्कटाचलाधीशः

## (विजयदासकृतिषु)


**तेलुगुमूलम् - सुस्वरं नागराजाचार्युलु**

**संस्कृतानुवादः - डा.गङ्गिशेट्टि लक्ष्मीनारायणः**

**चरवाणी - ९४९४२४८३४८**


(तदनन्तरम्)

कन्नडहरिदासवाङ्मयप्रपञ्चे श्रेष्ठकविः भक्तकविश्च भवति विजयदासवर्यः। एतेषां कृतयः प्रायशः जटिलाः भवन्ति। श्रीविजयदासवर्याणां कृतयः नारिकेलपाके भवन्तीति वक्तुं शक्यते। एतेषां मुखात् गङ्गाप्रवाहः इव वाग्देवी वाङ्ग - यवृष्टिं कारितवती। ''अपारे काव्यसंसारे कविरेव प्रजापतिः'' इति लक्षणम् अनुसृत्य यदा विजयदासवर्येण भगवान् श्रीनिवासः स्मर्यते सपदि विजयदावर्याः तं देवं श्रीनिवासं अशेष-अमोघ-शब्दजालेन अर्थगार्भितपदजालेन च स्तुत्वा स्वगात्रं विस्मृत्य कीर्तनं कुर्वन्ति।

**भक्त जन संरक्षणा। भक्तजन संरक्ष।**
**भवदुरित संहारि। भक्तर सुरधेनु**
**तरुवे चिंतामणि। भक्तराधीन नेंबो**
**बिरुदु अनुगाल पोत्तुमेरेव तिरुपति तिम्म एळु**

इति सुप्रभातगीतं कठिनपदजालेन नवचरणेषु (भक्ति-करुण-शृङ्गार-स्वभावोक्तिरित्यादि आलङ्कारिकशैल्याम्) भक्ति-श्रृङ्गाररसप्रधानतया वर्णितवन्तः। अस्मिन् सुप्रभातगीते दीर्घसमासघटना विजयदासवर्येण कृता।

**अंबरपु ताम्र मयवागे....... मंचदिंदेळु हरिये**

इति प्रथमे चरणे इत्थं वर्णयन्ति -

आकाशः ताम्रवर्णयुक्तोऽभवत्। अनूरुः सूर्यरथं वेगेन चालयति। चन्द्रः कलया न्यूनः जातः। नक्षत्राणि न दृश्यन्ते। कुमुदपुष्पाणि निमील्यन्ते। भूमौ व्यापृतः अन्धकारः अपगतः, सर्वत्र प्रकाशश्च व्याप्तः। पद्मानां विकासः जातः इति कारणेन भ्रमराः समागत्य पुष्पाणाम् उपरि तिष्ठन्ति। कुक्कुटः शब्दं करोति। हे कमलदलायिताक्ष! स्वामिन्! भक्तजनसंरक्षणार्थम् उत्तिष्ठ!

**उदयपर्वतके रथनूकि दनुमार्तांड.... तिम्मा एळु।।**

उदयपर्वतं प्रति सूर्यः समागतः। सूर्योदयः सञ्जातः। समुद्रतरङ्गाः न्यूना अभवन्। दशसु दिक्षु दानवाः भयेन कम्पमानाः अभवन्। देवताः शङ्ख-भेरिकादिवाद्यैः सङ्गीतालपं कुर्वत्यः भवताम् उपरि पुष्पवृष्टिं कुर्वत्यः भवन्तं स्तुवन्ति। हे सदमलानंद! भक्तजनसंरक्षणार्थम् उत्तिष्ठ!

**नारियरुबंदु अंगळबळिदुर्गंधद...कोनेरिवास एळो।।**

नार्यः समागत्य भवतः देवालयस्य पुरतः सम्मार्ज्य दिव्यगन्धेन जलं संस्थाप्य, तस्य उपरि सुन्दररङ्गवल्लीः संरच्य पञ्चवर्णैः अलङ्कृतवत्यः। अपि च श्यामलपत्रैः द्वारम् अलङ्कृतवत्यः। उत्साहिनः भवतः भक्ताः भवन्तं स्तुवन्ति, वैतालिकाः प्रशंसादिकं च कुर्वन्ति। हे कंसारे! भक्तजनसंरक्षणार्थम् उत्तिष्ठ!

**नृत्यदवरु बंदु तदिगिणि तथैय्य.... सर्वेशने एळो।** नर्तक्यः भवतां पुरतः समागत्य तदिगिणि तदैथै इति मृदङ्गजतिभ्यः युक्ततालरागान् त्रयस्त्रिंशत् रागान् उच्चैः आलपन् नाट्यं कुर्वन्ति, अन्याः काश्चन स्त्रियः मौक्तिकनीराजनं कुर्वत्यः तव पादयोः निकटे दण्डायमानाः भूत्वा पश्यन्ति। हे भक्तजनसंरक्षक! सर्वेश! उत्तिष्ठ!

**दुडिगे ताळ शङ्ख तंबूरि जागंटि....कुंडलिगिरि तिम्म एळु।।**

ताल-शङ्खादिवाद्यानि हस्ते संस्थाप्य परमप्रेमास्पदाः हरिदासाः भवतां पुरतः समूहरूपेण दण्डायमानाः भूत्वा पादयोः नूपुरे धृत्वा आकाशं यावत् प्रतिध्वनिः भवति तावत् साभिनयं भवतः गुणगानं कुर्वन्ति। तस्य गुणगानस्य वैभवं वर्णयितुं न शक्यते। हे शेषगिरिवास! भक्तजनसंरक्षणार्थम् उत्तिष्ठ!

(अनुवर्तिष्यते)

भागः -१२

# भगवद्गीता

तेलुगुमूलम् - श्री कुप्पा विश्वनाथशास्त्री
संस्कृतानुवादः - बि.गिरीशकुमारः
चरवाणी - ९९८९६५७५७६



(तदनन्तरम्) 'यथा काश्यो वा वैदेहो वा उग्रपुत्र उज्ज्यं धनुरधिज्यं कृत्वा' इति बृहदारण्यकोपनिषदनुसारम् तत्कालादारभ्य एव तयोः वंशयोः सर्वे महावीराः एव समजायन्त। तद्वंशयोः जातावेव काशिराजविदेहराजौ। तौ पाण्डवानां पक्षं कुतः अनुगतौ? मत्पक्षे स्यातां खल्विति असूयां प्रदर्शयति दुर्योधनः। अनेन श्रीमद्भगवद्गीतायाः उपनिषदर्थप्रतिपादकत्वम् अपि सूचितं भवति। यतो हि उपनिषदि तथा गीतायाञ्च ''काशिराज'' इत्येव प्रस्तुतत्वात्। एवं सकलोपनिषदां साराभूता इयं भगवद्गीता इति ज्ञायते। एवमन्ये राजानः पुरुजित्, कुन्तिभोजः, शैब्यश्चात्र प्रस्तुताः। ''कुन्तिभोज'' इत्यनेन कुन्त्याः पिता ग्राह्यः। यतो हि - तद्वंशजानां सर्वेषामपि कुन्तिभोज इति पदेनैव व्यवहारात्, अत्र पाण्डवानां समकालीनो राजा कुन्त्याः पिता एव भवतीति कारणात् च। ''नरपुंगव'' इति शिबिराजस्य विशेषणं, नाम अत्युत्तमपराक्रमवानित्यर्थः। सोऽपि तेषां पक्षे एव प्रविष्टः इति कथनादसूयां प्रदर्शयति।।

एवमन्यानपि प्रस्तौति -

**युधामन्युश्च विक्रान्तः उत्तमौजाश्च वीर्यवान्।**
**भद्रो सौद्रौपदेयाश्च सर्व एव महारथाः।।१-६।।**

''विक्रान्तः'' इति ब्रुवन् धृष्टद्युम्नस्य अनुजसमं ''युधामन्युं'' तथा ''वीर्यवान्'' इत्यनेन युधामन्योः अनुजसमम् ''उत्तमौज'' इति राजानं सूचयति।।

''सोभद्र'' इति पदेन लक्षितः ''अभिमन्युः''। सुभद्राया अपत्यं पुमानिति। असो असम्पूर्णविद्यावान् चेदपि, केवलं व्यूहप्रवेशज्ञानमात्रस्य सत्त्वेऽपि महावीर इति प्रथां प्राप्तवान्। केवलं षोडशवर्षीयः सः प्रतीकारवाक्यानि उद्घोषयति। एनं यः कोऽपि अभिमुखो हन्तुं न पारयतीति क्षुद्रव्यूहमारचितवान्। एवं द्रोपदेयाः नाम धर्मराजस्य पुत्रः प्रतिविन्ध्यः, भीमसेनस्य पुत्रः श्रुतसोमः, अर्जुनस्य पुत्रः श्रुतकीर्तिः, नकुलस्य पुत्रः शतानीकः, सहदेवस्य पुत्रः श्रुतसेनः इति पञ्चजनाः।

अत्र अंशद्वयं दृष्टिगोचरं भवति। अत्र दुर्योधनः एकमपि संबन्धभावेन न सूचितवान्। ''सोभद्रः'' इति ''द्रोपदेयाः'' इति परपुत्रानिव सूचितवान् न तु स्वसंबन्धिनः इति। अनेन दुर्योदनस्य स्वभावः कीदृशः इति ज्ञायते। केवलं स्वार्थपरमेव चिन्तयत्यसौ। एतादृशानां कदापि उन्नतिः न लभ्यते इति सूचितुं प्रत्यक्षनिदर्शनं भवति एषः।

''सर्वे एव महारथाः'' वस्तुतः युद्धे 'रथि' ''अर्धरथि'' ''महारथि'' ''अतिरथि'' इति वर्गचतुष्टयं भवति। तत् च आगामिन्यां संचिकायां विचारयामः।

(अनुवर्तिष्यते)



# भारते भगवदौन्नत्यम्



- एल्. अक्षयाचार्यः
चरवाणी - ७०१३२९७२८०

महाभारते अनेकाः कथाः विद्यन्ते। आहत्य कथानां सर्वासां आशयस्तु भगवन्नारायणस्य महिमाप्रदर्शनमेव। अत एव भारते एकत्र **धर्मे च अर्थे च कामे च मोक्षे च भरतर्षभ। यदिहास्ति तदन्यत्र यन्नेहास्ति न कुत्रचित्** इति भारतोत्कर्षः उच्यते। अतः न भारतसमं शास्त्रं इति वचनम् अस्ति। तत्र सभापर्वणि प्रायशः श्रीकृष्णपरमात्मनः महिमा आरम्भे प्रदर्शितः। किञ्चिन्मात्रं वस्तु स्वीकृत्य अनूदितुम् अभिलषामि।

धर्मराजः श्रीकृष्णस्य अनुमत्या सभाम् अपूर्वां निर्मातुम् अङ्गीकृतवान्। विश्वकर्मा भगवतः आज्ञया निर्ममे सभाम्। तत्र सभायां आहूताः सर्वे विशेषतः मुनिश्रेष्ठाः समारम्भे भागिनः आसन्। तत्र सन्निहितां वेदव्यास-कृष्ण-परशुरामरूपिणीं श्रीहरेः आकृतिं पश्यन्तः महापर्वकालस्य फलम् आपुः। ततः श्रीकृष्णपरमात्मा अग्रपूजां स्वीकृतवानिति सेर्षया शिशुपालः तं अनेकप्रकारेणानिन्दत्। अन्ते चक्रायुधेन तं यमनिकेतनं प्रापयित्वा तद्गतं द्वारपलकं जयं स्वस्मिन् लीनमकरोत्। ततः परशुरामनिर्मिततीर्थेषु सूर्यग्रहणकाले स्नानं कृत्वा कृतकृत्याः आसन्। तथा वासुदेवेन अनेकविधयागान् निर्माय यथेष्टं विप्रेभ्यः दक्षिणाम् अददुः॥

अथ द्वाराकां प्राप्य एतस्मिन् दिने क्रियमाणं महाश्वमेधयागं कृत्वा पादोनदिवसे एव रथं भूमण्डलं भ्रामयित्वा क्षणमात्रे जरासन्धादिराज्ञः पराजयमकरोत्।

काले गच्छति सति एकदा उषहस्तविप्रः यज्ञभूमिम् एत्य अरोदत्, पुत्राः मदीयाः जननपरक्षणमेव अदृश्याः भवन्ति। रक्ष मां पुत्रांश्चेति। तदा अर्जुनेन पुत्रान् रक्षाम्यहम् इत्युक्ते सति विप्रः वदति, कृष्णबलरामाभ्यां रक्षणानर्हाः मत्पुत्राः। भवतः कीदृशी शक्तिः? इति। अस्य प्रश्नस्य सगर्वेण अर्जुनः 'अहं गत्वा आनयामि' इति कृष्णं प्रति विज्ञाप्य गतवान्। पुनः विपुलः अर्जुनः आगतः इति कृष्णः झटिति कार्यकारी अभूत्। विप्रपत्न्याः प्रसवकाले अर्जुनः अस्त्रैः दिग्बन्धं कृतवान्। अथापि सुताः अदृश्याः अभूवन्। ततः अग्निप्रवेशायोद्युक्तम् अर्जुनम् विप्रञ्च रथे उपावेश्य उत्तरदिशि प्रयाणं कृत्वा तत्र अष्ठबाहुभिः सकलरत्नभूषणैः विराजमानं स्वं मूलरूपं प्राविशत्। ततः अनन्तसूर्यातिक्रमणतेजोविशिष्टः पीताम्बरधारी देवैः स्तुतः सन् मूलरूपात् पुनरागत्य कृष्णः सपुत्रः स्वरूपं प्रकटितवान् विप्रस्य। सुनन्दनन्दादिविष्णुपार्षदा एव अर्जुनस्य गर्वभङ्करणाय एवं चक्रिरे। ततः यागदीक्षासमये सोल्लङ्घनकर्म च कृत्वा गमनम् अनुचितमिति प्रायश्चित्तं कृत्वा यागं समाप्य ब्रह्मरुद्रादिब्राह्मणांश्च यथोचितम् अर्चयामास। अवभृतस्नानन्तरं दैत्यावेशभरितं विजयं दन्तवक्ररूपेण प्रख्यातं विरूढरथं गदया विभित्य तत्रस्थ-हरिपार्षदविजयं स्वस्मिन् लीनमकरोत्। एवं धर्मत्राणाय धार्मिकान् पाण्डवान् न तत्याज।



एकदा पाण्डवाः अक्षक्रीडायां पराजयं प्राप्य वनवासकाले पाण्डवानां पत्न्यः पुत्राश्च कुन्त्या साकं नगरेऽवसन्। सुभद्राभिमन्यू द्वावपि कृष्णेन साकं द्वारावतीम् एत्य कृष्णस्य रक्षणेऽवसताम्। ते यत्र वसन्ति तत्र दशसहस्त्रयतीनां अशीतिसहस्त्रऋषीणां वासः वर्तते स्म। ते तु प्रत्येकं त्रिशतसेवकजनैः साकं वसति स्म। सर्वेषाम् एतेषां पोषणकार्यं धर्मराजस्योपरि असीत्। स तु मिहिरं सूर्यम् आरध्य अक्षयपात्रं यथेष्टपदार्थवितरणशीलं दिवसे एकवारमेव प्राप्य तेन अभिलषितपदार्थान् गृहीत्वा पुपुषुः।

एकदा दुर्योधनस्य सपर्यां स्वीकृत्य दुर्जनभोजनेन उन्मत्तः अयुतसंख्याकशिष्यैर्युतः दुर्वासः मर्ध्याह्नकाले भोजनसमाप्त्यनन्तरम् एत्य पाण्डवान् प्रति, अहो क्षुधिताः वयम्। स्नानसमापनानन्तरम् अस्मान् प्रति भोजनं परिवेषयन्तु इति द्रौपदीमादिश्य स्नानाय सरः गतवान्। द्रौपदी अनन्यरक्षकी एकमात्रम् भ्रातारं श्रीकृष्णं मनसा सस्मार। झटिति आविर्भूतः कृष्णः 'अहम् क्षुधितोऽस्मि' यत्किमपि ददातु इत्यवदत्। सा तु अक्षयपात्रम् प्रदर्श्य भोजनकालः समाप्तः, पात्रम् च शुद्धीकृतम् कथम् वा खाद्यम् लभ्यते इति तस्याः वचनम् अनादृत्य पात्रस्य ग्रीवायाम् लग्नम् एकम् कवलम् वदने प्रक्षिप्य अनेन सर्वेषाम् जठराग्निरूपेण विद्यमानः भगवान् प्रीतो भवतु इति उक्तवान् श्रीकृष्णः। तेन तत्र विद्यमानः सशिष्यको दुर्वासः जाठराग्निशमनेन क्षुद्बाधारहितः अगच्छत्। एवम् परित्राता द्रौपदी श्रीकृष्णेन।

ततः अज्ञातवाससमये विराटराजस्य आश्रमे रूपान्तरेण निवासाय पाण्डवान् अचोदयत् श्रीकृष्णः। कामुकम् कीचकञ्च तत्र विद्यमानः भीमः सञ्जघान। यदा भीष्मद्रोणादयः गोग्रहणाय आगच्छन्तः आसन्। तैस्साकम् योद्धुम् उत्तरकुमारेण गमनकाले बृहन्नलरूपः अर्जुनः तस्य सारथ्यम् स्वीकृत्य भीतम् समाधानम् कृत्वा शमीवृक्षोपरि विद्यमानानि अस्त्राणि स्वीकृत्य सधैर्यम् तैस्साकम् युद्धं कृत्वा तान् जितवांश्च। धुर्योदनादनादयः सांवत्सरिकः अज्ञातवासः असमाप्तः इति अवदन्। तत्र अज्ञातवासवध्यनन्तरमेव पार्थः दृष्टिगोचरः अभवदिति भीष्मः अवदत्। ततः राज्यस्य वितरणाय सुयोधनस्य दुष्टबुध्या धृतराष्ट्रः विमुखः अभवत्। तस्मात् महासंग्रामः सञ्जातः। तत्र कृष्णः एकः पाण्डवानाम् सहायको भूत्वा स्वसैन्यानि सुयोधनाय व्यतरत्। सुयोधनस्य एकादश अक्षौहिणी सेनाः सन्ति। पाण्डवानां सप्त अक्षौहिणी सेनाः सन्ति। अथाऽपि जयलक्ष्मीः पाण्डवान् अवनोत् श्रीकृष्णानुग्रहेणैव।



# त्याज्यं न धैर्यम्

- श्री कृष्णकिशोरः
चरवाणी - ७०१३४४८०७२

एकः नरः टोपिकाः विक्रीय स्वनिर्वाहं कुरुते स्म, किन्तु असौ आपणिकः न आसीत्। स तु टोपिकानां पुटकं स्कन्धे निधाय यत्र तत्र अटन् ताः विक्रीणीते स्म! ग्रामे नगरे उपनगरे रथ्यासु राजमार्गेषु विपणिषु च भ्राम्यन् मधुरस्वरेण वदति स्म - गृह्यन्तां टोपिकाः, गृह्यन्तां मनोरमाः चित्रवर्णाः टोपिकाः इति। तासां टोपिकानां विक्रयेण यत् धनं प्राप्नोति, तेन परिवारस्य पोषणं करोति।

एकस्मिन् दिने टोपिकानां विक्रयो न अभवत्। स बहु अभ्रमत् किन्तु कोऽपि ग्राहकः न अमिलत्। मध्याह्नवेला जाता। ग्रीष्मतापतप्तः स ग्रामाद् बहिः देवमन्दिरपरिसरे एकस्य छायातरोः तले उपाविशत्। तत्र सहानीतं भोजनं खादित्वा शीतं जलम् अपिबत्। ततः तत् पुटकं शिरस्तले निधाय विश्रामार्थम् अशेत। शनैः शनैः निद्रा तस्य चक्षुषी निमीलितवती।

तस्मिन् प्रदेशे बहवः कपयः अपि आसन्। परस्परं क्रीडासक्ताः ते हस्ताभ्यां तरुशाखाम् अवलम्ब्य इतस्ततः कूर्दन्ति स्म। तदैव तेषां दृष्टिः तरुतलस्थिते तस्मिन् जने पतिता।

चपलाः ते कपयः अशब्दं तम् उपेत्य तस्य पुटकात् सर्वाः टोपिकाः निष्कासितवन्तः स्वशिरःसु धृतवन्तः। तदनु धृतटोपिकाः ते मर्कटाः वृक्षशाखासु स्थिताः।

किंचित्कालानन्तरम् असौ टोपिकाविक्रेता निद्रां परिहाय उपविष्टः। पुटकं रिक्तं वीक्ष्य स उद्विग्नः जातः। इतस्ततः सम्भ्रमेण पश्यतः तस्य दृष्टिः सहसा वृक्षोपरि गता यत्र सर्वे वानराः शिरःसु संधारितटोपिकाः विराजन्ते स्म।

एतद् वीक्ष्य प्रथमं तु स भयम् अनुभूतवान्। पश्चात् एतद् अपूर्वं दृश्यं विलोक्य स मनसि अहसत्। कथम् एतेभ्यः कपिभ्यः टोपिकाः लभ्येरन् इति चिन्ताऽपि तं दुनोति स्म, किन्तु स धैर्यं न जहौ।

कपीनाम् अनुकरणशीलतां विचार्य स एकम् उपायम् अचिन्तयत्। स्वशिरसः टोपिकाम् अवतार्य तेषां समक्षम् असौ तां भूमौ अपातयत्। सर्वे वानरा अपि तथा अकुर्वन्। स द्रुतम् एव ताः विचित्य स्वपुटके निधाय ततः प्रस्थितः।





चित्रकथा

# हनूमतः भक्तिः


तेलुगु मूलम् - श्री डी.श्रीनिवास दीक्षितुलु

चित्राणि - श्री के.द्वारकानाथः

संस्कृतानुवादः - - श्री वै.उमामहेश्वररावः

चरवाणी - ७२८६९८०१७७


1 श्रीरामचन्द्रस्य पट्टाभिषेकः अत्यन्तवैभवेन सञ्जातः। अयोध्यानगरं कोलाहलपूरितं वर्तते। यथा महर्षयः, ब्राह्मणाः सन्तृप्तिं प्राप्नुयुः तथा श्रीरामः दानधर्मादिकं कृतवान्।

2 श्रीरामचन्द्र! यावज्जीवं सुखेन आनन्देन च वर्धस्व। धर्ममनुसर!

3 श्रीरामराज्याय शुभं भूयात्।



4 सुग्रीव! एतं मणिहारं स्वीकुरु

5 धन्योऽस्मि प्रभो



6 वानरप्रमुखानां कृतेऽपि रामः मूल्यवन्ति उपायनानि दत्तवान्। सर्वे आनन्देन....

7 जय! जय! महाराज!



8 श्रीरामः अत्यन्तमूल्यवतः उपहारान् सीतादेव्यै प्रदत्तवान्।

9 महाराणि! समादरपूर्वकं मह्यं वायुदेवेन प्रदत्तम् एतं मौक्तिकहारं स्वीकुरु!

10 धन्याऽहं प्रभो



11 सीतां दृष्ट्वा श्रीरामः....

12 देवि! तव मुखे निरुत्साहः दृश्यते। किमर्थम्?

















।। लोकाः समस्ताः सुखिनो भवन्तु।।

स्वस्ति





अस्य चित्रपटस्य रञ्जनं कुर्मः वा?

प्रदत्तं चित्रपटम् अधोनिर्दिष्टप्रदेशे स्थापयामो वा?

## चित्रलेखनम्




## रसप्रश्नाः

१. रामायणे गङ्गावतरणाख्यानं कुत्र वर्णितम्?

अ. बालकाण्डे आ. युद्धकाण्डे
इ. उत्तरकाण्डे ई. सुन्दरकाण्डे

२.लङ्कायाः राजवैद्यः कः?

अ. मारीचः आ. सुषेणः
इ. वसुदत्तः ई. अङ्गदः

३. वानराणां राजा कः?

अ. वाली आ. हनुमान्
इ. सुग्रीवः ई. अङ्गदः

४.रावणेन युद्धसमये श्रीरामस्य रथसारथिः कः आसीत्?

अ. हनुमान् आ. विभीषणः
इ. सुमन्त्रः ई. मातलिः

समाधानानि - १. अ २.आ ३. इ ४. ई









Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd., on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road,Tirupati 517 507.
Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.






२०-०४-२०२२ तिरुमल श्रीस्वामिनः आलये आचरित 'शुभकृत्' नामसंवत्सरस्य उगादि आस्थानम्, पुष्पप्रदर्शनदृश्यानि।





२०२२ एप्रिल् ०४ तः ०६ पर्यन्तं तिरुमल धर्मगिरि श्रीवेङ्कटेश्वरवेदविज्ञानपीठे समाचरितस्य श्रीलक्ष्मीश्रीनिवासधन्वन्तरिमहायागस्य दृश्यानि।





स्विम्स् - टाटा केन्सर् चिकित्सालयनिर्माणपरिशीलने ति.ति.दे. कार्यनिर्वहणाधिकारिणः डा॥ के.यस्.जवहर् रेड्डि ऐ.ए.एस्., महाभागाः। तत्र च ति.ति.दे. तिरुपति संयुक्तकार्यनिर्वहणाधिकारिणः श्री वि. वीरब्रह्मम्, ऐ.ए.एस्., स्विम् डैरेक्टर् डा॥ बि.आर्. रमणन् तथा इतरोन्नताधिकारिणश्च।



SAPTHAGIRI (SANSKRIT) ILLUSTRATED MONTHLY PUBLISHED BY TIRUMALA TIRUPATI DEVASTHANAMS
PRINTING ON 20-04-2022 & posting at Tirupati RMS Regd.with the Registrar of Newspapers for India under RNI No.21138/1970 Postal Regd. No. TRP/154/2021-2023"
LICENCED TO POST WITHOUT PREPAYMENT No.PMGK/RNP/WPP-04(4)/2021-2023"
Posting on 5th of every month.



अञ्जनाद्रितटे जातमञ्जनायास्तपः फलम्।
शेषाचलाद्रवेर्लोकं प्रयातं नौमि मारुतिम्॥